रतम्यात् ॥ कशां । कट । चकाट । भू । बभूव । घट्ट । जघट्टे । ढौकृ । डुढौके । घ्राघृ । दघ्राघे ॥ खयां । खनु । चखान । फक्क । पफक्क । छिदिर् । चिच्छेद । टिठकारयिषति । ष्ठा । तिष्ठासति ॥ प्रकृतिजशां । जल । जजाल । ओव्रश्चू । वव्रश्च । गम्लृ । जगाम । डीङ् । डिड्ये । दंश । ददंश ॥ प्रकृतिचरां । चमु । चचाम । टल । टटाल । तकि । ततङ्क । कस । चकास । पल । पपाल । शल । शशाल । पद्लृ । ससाद । स्मृ । सस्मार ॥ प्रकृतिजशां प्रकृतिचरां च जश्त्वचर्त्वविधानं क्रमेण चर्त्वजश्त्वबाधनार्थं । इति पदमञ्जर्यां ॥

## खरि च ॥ ५५ ॥

खर्प्रत्याहारान्तर्गतवर्णेषु परतो झल्प्रत्याहारान्तर्गतवर्णानां स्थाने चर्प्रत्याहारान्तर्गतवर्णा आदेशाः स्युः ॥ भिदिर् । भेत्ता । भेत्तुं ॥ युध । युयुत्सते ॥ रभ । आरिप्सते ॥ डुलभष् । आलिप्सते ॥ जश्ग्रहणस्यात्र नाभिसंबन्धः । पूर्वत्र चानुकृष्टत्वात् ॥

## वावसाने ॥ ५६ ॥

अवसाने वर्तमानानां झलां स्थाने चर्संज्ञका आदेशा वा स्युः ॥ वाक् । वाग् । त्वक् । त्वग् । श्वलिट् । श्वलिड् । त्रिष्टुप् । त्रिष्टुब् । रामात् । रामाद् ॥

## अणो ऽप्रगृह्यस्यानुनासिकः ॥ ५७ ॥

अणप्रत्याहारान्तर्गतवर्णस्याप्रगृह्यसंज्ञकस्यावसाने वर्तमानस्यानुनासिक आदेशो वा स्यात् ॥ दधिँ । दधि ॥ मधुँ । मधु ॥ कुमारीँ । कुमारी ॥ अणः किं । कर्तृ । हर्तृ ॥ पूर्वेण णकारेणात्राण् गृह्यते ॥ अप्रगृह्यस्य किं । अग्नी । वायू ॥

## अनुस्वारस्य ययि परसवर्णः ॥ ५८ ॥

अनुस्वारस्य यय्प्रत्याहारान्तर्गतवर्णेषु परतः परसवर्ण आदेशः स्यात् ॥ अङ्किता । अञ्चिता । उञ्छिता । कुण्ठिता । कुण्डिता । नन्दिता । शान्ता । कम्पिता । गुम्फिता ॥ एषु नश्चापदान्तस्येत्यनुस्वारे कृते तस्य ककारादिषु परतः क्रमेण वर्गपञ्चमा ङकारादयः ॥ ययि किं । आक्रंस्यते ॥

## वा पदान्तस्य ॥ ५९ ॥

पदान्ते वर्तमानस्यानुस्वारस्य यय्प्रत्याहारान्तर्गतवर्णेषु परतः परसवर्ण आदेशो

वा स्यात् ॥ तङ्कथञ्चित्पक्षण्डयमानन्नभस्थम्पुरुषो ऽवधीत् । तं कथंचित्पक्षडयमानं नभस्थं पुरुषो ऽवधीत् । अत्र ककारादिषु परतो ऽनुस्वारस्य पक्षे क्रमेण ङकारादय आदेशाः ॥ सँय्यन्ता । संयंता । सँव्वत्सरः । संवत्सरः । यँल्लोकं । यं लोकं । अत्रानुस्वारस्य पक्षे क्रमेणानुनासिका यवलाः ॥

## तोर्लि ॥६०॥

तवर्गस्य ल् । इत्येतस्मिन् परे परसवर्ण आदेशः स्यात् ॥ तल्लयः । अग्निचिल्लुनाति । सोमसुल्लुनाति । भवाँल्लुनाति । महाँल्लुनाति । विद्वाँल्लिखति ॥ नस्यानुनासिको लकारः ॥

## उदः स्थास्तम्भोः पूर्वस्य ॥६१॥

उद् । इत्येतस्मात् परयोः ष्ठा । ष्टम्भु । इत्येतयोर्धात्वोरवयवस्य स् । इत्येतस्य पूर्वसवर्ण आदेशः स्यात् ॥ ष्ठा । उत्थानं । उत्थाता । उत्थातुं । उत्थातव्यं ॥ ष्टम्भु । उत्तम्भिता । उत्तम्भितुं । उत्तम्भितव्यं ॥ अत्र घोषमहाप्राणप्रयत्नवतः सकारस्य तादृश एव थकार आदेशः । तस्य झरो झरीति पक्षे लोपः । लोपाभावपक्षे तु थकारद्वयस्य श्रवणं भवति । न तु खरि चेति चर्त्वं । चर्त्वे कर्त्तव्ये थकारस्यासिद्धत्वात् । उत्थ्थानं । उत्थ्थम्भनं ॥ स्थास्तम्भोः किं । उत्स्नातः ॥

## झयो होऽन्यतरस्यां ॥६२॥

झय्प्रत्याहारान्तर्गतवर्णात् परस्य ह् । इत्येतस्य पूर्वसवर्ण आदेशो वा स्यात् ॥ वाग्घसति । वाग्हसति ॥ श्वलिड्ढसति । श्वलिड्हसति ॥ अग्निचिद्धसति । अग्निचिद्हसति ॥ त्रिष्टुब्भसति । त्रिष्टुब्हसति ॥ अत्र घोषवतो नादवतो महाप्राणस्य हस्य तादृशा एव वर्गचतुर्था घढधभा आदेशा भवन्ति ॥ झयः किं । प्राङ् हसति । भवान् हसति ॥

## शश्छोऽटि ॥६३॥

झय्प्रत्याहारान्तर्गतवर्णात् परस्य श् । इत्येतस्य छ् । इत्ययं आदेशो वा स्यात् । अट्प्रत्याहारान्तर्गतेषु वर्णेषु परतः ॥ वाक्छेते । वाक् शेते ॥ अग्निचिच्छेते । अग्निचित् शेते ॥ श्वलिट्छेते । श्वलिट् शेते ॥ त्रिष्टुप्छेते । त्रिष्टुप् शेते ॥

## हलो यमां यमि लोपः ॥ ६४ ॥

हल्प्रत्याहारान्तर्गतवर्णात् परेषां यम्प्रत्याहारान्तर्गतवर्णानां क्रमेण यम्प्रत्याहारान्तर्गतेषु वर्णेषु परतो लोपो वा स्यात् ॥ शय्या । शय्य्या । शीङ्धातोः संज्ञायां समजनिषदेति सूत्रेण क्यप्प्रत्यये धातोरयङ् यि क्ङितीत्ययङादेशे कृते ऽनचि चेति यकारस्य द्वित्वे ऽनेन पक्षे यलोपः । स्त्रीत्वं लोकात् ॥ आदित्यः । आदित्य्यः । अदितेरपत्यमित्यर्थे दित्यदित्येति सूत्रेण .ण्यप्रत्यये यस्येति चेतीकारलोपे यणो मय इत्यस्य पञ्चम्यन्तत्वस्वीकारे मयः परस्य यकारस्य द्वित्वे पक्षे यलोपः ॥ आदित्यं हविः । आदित्यः स्थालीपाकः । आदित्यशब्दाण्ण्यप्रत्यये यस्येति चेत्यकारलोपे यणो मय इति यकारस्य द्वित्वे ऽनेन एकस्य द्वयोर्वा यकारयोः पक्षे लोपः ॥ हलः किं । अन्नं ॥ यमां किं । अर्घ्यं ॥ यमि किं । शार्ङ्गं ॥

## झरो झरि सवर्णे ॥ ६५ ॥

हल्प्रत्याहारान्तर्गतवर्णात् परस्य झर्प्रत्याहारस्थवर्णस्य लोपो वा स्यात् सवर्णे झर्प्रत्याहारस्थे वर्णे परे ॥ प्रत्तं । प्रत्त्तं ॥ अवत्तं । अवत्त्तं ॥ नीत्तं । नीत्त्तं ॥ सूत्तं । सूत्त्तं ॥ दाधातोः क्तप्रत्यये ऽच उपसर्गादित्याकारस्य तकारः । चर्त्वेन दस्य तः । अनचि चेति तकारस्य द्वित्वे चत्वारस्तकाराः । तत्रानेनैकस्य द्वयोर्वा पक्षे लोपे त्रिद्विचतुस्तकारकं रूपत्रयं भवति ॥ झरः किं । शार्ङ्गं ॥ झरि किं । प्रियपञ्च्ज्ञः ॥ सवर्णे किं । तर्प्ता । तर्प्तुं ॥

## उदात्तादनुदात्तस्य स्वरितः ॥ ६६ ॥

उदात्तात् परस्यानुदात्तस्य स्वरित आदेशः स्यात् ॥ गार्ग्यः । वात्स्यः । ञित्वादाद्यन्तस्याद्युदात्तत्वं । शेषनिघातेन यकाराकारो ऽनुदात्तः । तस्यानेन स्वरितत्वं ॥ पचति । पठति । शप्तिपावनुदात्तौ । धात्वकार उदात्तः । ततः परस्य शवकारस्य स्वरितत्वं ॥

## नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानां ॥ ६७ ॥

उदात्तोदयस्य स्वरितोदयस्य चानुदात्तस्य स्वरित आदेशो न स्यात् । गार्ग्यकाश्यपगालवभिन्नानामाचार्याणां मतेन ॥ उदयशब्दः परशब्दस्यार्थे प्रातिशाख्येषु प्रसिद्धः । न चोदात्तानुदात्तस्वरितानाम ॥ उदात्तोदयम् । गार्ग्यमत ।

वात्स्यस्तत्र । तत्रशब्दो लित्स्वरेणाद्युदात्तः । तस्मिन् परतो गार्ग्यवात्स्ययोरकारस्यानुदात्तस्य न स्वरितं ॥ स्वरितोदयस्य । गार्ग्यः क्व । वात्स्यः क्व । क्वशब्दो किमो ऽदित्यत्प्रत्ययान्तस्तित्त्वात् स्वरितः । तस्मिन् परे ऽनुदात्तस्याकारस्य न स्वरितं ॥ पूर्वेण प्राप्तस्य स्वरितस्यायं प्रतिषेधः ॥ अगार्ग्यकाश्यपगालवानां किं । गार्ग्यस्तत्र । गार्ग्यः क्व । तेषां मतेन भवत्येव स्वरितः ॥ अनेकाचार्यसंकीर्तनं पूजार्थं ॥ उदात्तस्वरितपरस्येति वक्तव्य उदयग्रहणं मङ्गलार्थं ॥ मङ्गलादीनि हि शास्त्राणि प्रथन्ते । मङ्गलमध्यानि । मङ्गलान्तानि च । वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषाणि चेति वृद्धिसूत्रे भाष्योक्तेः ॥ इह आदौ वृद्धिरादैजिति वृद्धिशब्दः प्रयुक्तः । मध्ये शिवशमरिष्टस्य करे इति शिवशब्दः । अन्ते चायमुदयशब्दः ॥

## अ अ ॥६८॥

अ । इत्येतस्य । अ । इत्येष आदेशः स्यात् ॥ विवृतप्रयत्नकस्याकारस्य स्थाने संवृतप्रयत्नको ऽकारो ऽनेन क्रियते ॥ वृक्षः । प्लक्षः ॥ इह शास्त्रे कार्यार्थमकारो विवृतः प्रतिज्ञातस्तस्य तथाभूतस्यैव प्रयोगो मा भूदिति प्रत्यापत्तिः क्रियते ॥

॥ इति सूत्रपाठे ऽष्टमाध्यायस्य चतुर्थः पादो ऽध्यायश्च समाप्तः ॥

॥ इत्यष्टकं पाणिनीयं संपूर्णं ॥